**(मेदोगतज्वरलक्षणम्)**

तृषा ......... र्दाहो भ्रमस्तमम् ।

दौर्गन्ध्यगात्रविक्षेपो ज्वरं मेदोगतं स्मृतम् ॥२०७॥

**(अस्थिगतज्वरलक्षणम्)**

अन्तर्दाहं बहि .... कौटिल्यं ... ज्वरम् ।

क्षयपाण्डुरभादेहं ज्वरमस्थिगतं स्मृतम् ॥२०८॥

**(शुक्लगतज्वरलक्षणम्)**

तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्रता ।

शुक्ल .... मृत्युश्च जायते शुक्लसंश्रये ॥२०९॥

**(आह्निकज्वरलक्षणम्)**

अथोत्तरं प्रवक्ष्यामि आह्निकज्वरलक्षणम् ।

शीतं सपुल ........................... ॥२१०॥

....रुजाङ्गवैकल्यकुक्षिपार्श्वं च शूलभृत्।

अपथ्यवाञ्छा तन्द्रा च पादहृन्मुखशोफता ॥२११॥

गात्रं पाण्डुरवर्णं च पीतवर्णे .... च जाड्यता ।

करपादविदाहस्स्यादाह्निकज्वरलक्षणम् ॥२१२॥

ऐकाह्निकं व्याह्निकं च त्र्याह्निकं चतुराह्निकम् ।

पञ्चाह्निकं चार्धरात्रं पाक्षिकं ...... ॥

...................नीयाद्भिषग्वरैः ॥२१३॥

**(सन्निभेदाः - वातसन्निलक्षणम्)**

शिरोहृत्पार्श्वपृष्ठेपु गले जिह्वोष्ठकर्णयोः ।

तीव्रं (वातसन्निरितिस्मृतम्) ॥२१४॥

**(पित्तसन्निलक्षणम्)**

अं ....... मदप्रलापश्चित्तविभ्रमः ।

मोहमूर्छाज्वरे जातं पित्तसन्निरिति स्मृतम् ॥२१५॥

**(श्लेष्मसन्निपातज्वरलक्षणम्)**

सकासक्षय ..... कफसन्निरिति स्मृतम् ।

..................................॥२१६॥

**(सन्निपातज्वरलक्षणम्)**

तन्द्रा जा ........................ भ्रमैः

दाहारोचकगात्रभङ्गजडतामूकत्वमुग्धार्तिभिः ।

पित्तासृग्वमनाक्षिभेदरसनाकार्श्यस्य .....

..................................॥२१७॥

**(त्रयोदशसन्निपातानि)**[१]

सन्धिगश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः ।

(कर्णिक)स्तान्द्रिश्चैव (भग्ननेत्रश्चपित्तजः) ॥२१८॥

(शीताङ्गोऽप्यभिन्यासध) रक्तष्ठीविप्रलापकः ।

जिह्विक(ः कण्ठकुब्जश्च) सन्निपातास्त्रयोदश ॥२१९॥

---

(१)सन्धिकश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः ।
शीताङ्गस्तन्द्रिकश्चैव कण्ठकुब्जश्चकर्णकः ॥
विख्यातो भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ।
जिह्वकश्चेत्यभिन्यासः सन्निपातास्त्रयोदश ॥– इति योगरत्नाकरे

**(सन्धिगसन्निलक्षणम्)**

स्यादास्यं श्लेष्मणा पूर्णं शूलं कासोऽतिवेदना ।

सन्तापश्चान्तको ज्ञेयः सन्निपातोऽतिमारकः ॥२२०॥

**(रुग्दाहसन्निलक्षणम्)**

मोहस्तापं तृषा जाड्यं श्वासस्याल्लक्षणानि वै ।

कष्टात्कष्टतरो ज्ञेयो रुग्दाहे सन्निपातके ॥२२१॥

चित्तविभ्रमसन्नि .....(तन्त्रलापकं)।

नृत्तवैकल्यपित्ता च विकटाक्षश्च वीक्षणे ॥२२२॥

लक्षणं सन्निपात(....)ज्ञा विभ्रमम् ॥२२३॥

..........तं छर्धतीसारक.....नम् ।

क्षीणनादङ्गतापश्च हिक्का श्वासकफो रमिः ।

सर्वाङ्ग ....... (शि)थिलो ................. ॥२२४॥

**(........लक्षणम्)**

अतितन्द्राज्वरश्वासक्लमस्तापोऽतिसारतृट् ।

स्थूलकण्ठावपुः श्यामजिह्वाकण्ठे च कण्डुता ॥

श्रुतिस्वल्पकफश्चेति ता ............... ॥२२५॥

**((कण्ठकुब्जसन्निलक्षण)णम्)**

कण्ठग्रहो मदो मूर्छा दाहकम्पप्रलापनम् ।

मोहस्तापः शिरोर्तिश्च वातार्तो प्रलपन् श्वसन् ॥

कण्ठकुब्जस्सन्निपातं कष्टसाध्यं विनिर्दिशेत् ॥२२६॥

**(कर्णिकसन्निलक्षणम्)**

ज्वरः कर्णान्तशोफश्च श्वासः कम्पप्रलापनम् ।

स्वेदः कण्ठग्रहस्तापो हृल्लासाङ्गव्यथापि च ॥२२७॥

कर्णिके सन्निपाते च लक्षणानि भवन्ति वै ।

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणम् ॥

शोफस्सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥२२८॥

**(भुग्ननेत्रसन्निलक्षणम्)**

श्वसनं लोचनं भुग्नं स्मृतिशून्यो ज्वरोऽधिके ।

(दाह)प्रलापनं कम्पं भ्रमो निद्रा च लक्षणैः ॥

ज्ञातव्यं भुग्ननेत्राय सन्निपातं क्षयङ्करः ॥२२९॥

**(रक्तेष्टि(क्तष्ठीवि)सन्निपातलक्षणम्)**

रक्तनिष्ठीवनं मूर्छा वात(..)स्तृषा भ्रमः ।

वान्तिहिक्काऽतिसार(श्च) प्रज्ञानाशो व्यथा स्वपन् ॥२३०॥

मण्डलोश्यावरक्ताश्च श्वास (....) णावः ।

कष्टात्कष्टतरो ज्ञेयो रक्तष्ठीवी विघातकृत् ॥२३१॥

**(प्रलापकसन्निलक्षणम्)**

अतिप्रलापता पौ....र्तिः परिवेदनम् ।

पादशोफः ........ चित्तशून्यता ॥

वातोल्बण ......... ध्यपित्ते प्रलापके ॥२३२॥

**(जिह्विकसन्निलक्षणम्)**

कण्टका कठिना जिह्वा कासश्वास...विह्वलम् ।

मूको बधिरता तापो बलहानिविलक्षणैः ॥

जिह्विकस्सन्निपातोऽयं कष्टसाध्यं क्षयङ्करः ॥२३३॥

**(अभिन्याससन्निलक्षणम्)**

त्रिदोषं .... खे ..... वैकल्यनष्टवाक् ।

निश्चेतनातिश्वासश्च मन्दाग्निर्बलहानि च ।

मृत्युतुल्याह्यभिन्यासस्सन्निपातं सुलक्षयेत् ॥२३४॥

सन्धिगस्तान्द्रिकश्चैव साध्यौ स्याच्चित्तविभ्रमः ।

कष्टसाध्यं कण्ठकुब्जं कर्णिका जिह्विकस्तथा ॥२३५॥

कष्टात्कष्टतरौ ज्ञेयौ रुग्दाहो हन्ति मानवान् ।

अन्तको भुग्ननेत्रश्च रक्तष्ठीवीप्रलापकः ॥२३६॥

शीताङ्गोप्यभिन्यासश्च षट्साध्यास्सप्तमारकाः ।

.......व्या.....द्यैस्सन्निपातास्त्रयोदश ॥२३७॥

**(सन्निपातदिनप्रमाणम्)**

सन्धिगे वासरास्सप्तत्वन्तके दश वासराः ।

रुग्दाहे विंशतिदिनान्येवं विभ्रमनामनि ॥२३८॥

शीताङ्गे पक्षमेकं तु ..................... ।

विख्यातो वासरास्सप्तकण्ठकुब्जे त्रयोदश ॥२३९॥

कर्णिके तु त्रयो मासाः भुग्ननेत्रे दिनाष्टकम् ।

रक्तष्ठीवि दशाहानि प्रलापे तु चतुर्दश ॥२४०॥

जिह्विके षोडशदिनं त्वभिन्यासे तु पञ्चकम् ॥
यदिदं सन्निपातानां प्रमाणं तु प्रकीर्तितम् ॥२४१॥

(ग्रन्थान्तरे)[१]

सन्धिगस्सप्तदिवसस्तान्द्रिके पञ्चविंशतिः ।
त्र्यष्टकं चित्तविभ्रंशे कण्ठकुब्जवधाकम् ॥२४२॥
कर्णिके तु त्रयोमासाः जिह्विके षोडशस्तथा ।
रुग्वाहे विंशतिः प्रोक्ता त्वन्तके दशवासराः ॥२४३॥
भुग्ननेत्रे दिनाष्टौ च रक्तष्ठीवि त्रिरात्रकम् ।
प्रलापके द्विसप्त स्युः शीताङ्गे पक्षमेव च ॥२४४॥
अभिन्यासो महावेगात्सप्तरात्रान्न जीवति ।
परमायुरिदं प्रोक्तं सन्निपातक्रमेण तु ॥२४५॥

---

(१)सन्धिके वासराः सप्त चान्तके दश वासराः ।
रुग्दाहे विंशतिर्ज्ञेया वह्न्यष्टौ चित्तविभ्रमे ॥
पक्षमेकं तु शीताङ्गे तन्द्रिके पञ्चविंशतिः ।
विज्ञेया वासराश्चैव कण्ठकुब्जे त्रयोदश ॥
कर्णके च त्रयो मासा भुग्ननेत्रे दिनाष्टकम् ।
रक्तष्ठीविनि दिग्धस्राः प्रलापेश्चतुर्दश ॥
जिह्वके षोडशाहानि पक्षोभिन्न्यास लक्षणे ।
परमायुरिदं प्रोक्तं म्रियते तत्क्षणादपि ॥ इति योगरत्नाकरे

**(सन्निपातावस्था)**

प्रथमं श्वाससंयुक्तं द्वितीयं कसनं तथा ।

तृतीयं श्लेष्मलोपं च चतुर्थं कण्ठकूजनम् ॥२४६॥

पञ्चमं छर्दिं जायेत षष्ठेऽतीसारमेव च ।

सप्तमं पीनसं कुर्यादक्षिद्वेषं तदष्टकम् ॥

नवमं मांससंकोपं चादृश्यं दशमे भवेत् ॥२४७॥

**(सूतिकाज्वरलक्षणम्)**

अङ्गमर्दो ज्वरः क्लप्तो पिपासा गुरुगात्रता ।

शोफशूलातिसारश्च सूतिकाज्वरलक्षणम् ॥२४८॥

**(आमज्वरलक्षणम्)**

लालाप्रसेको वैरस्यं हृदयाध्य(.)रोचकम् ।

तन्द्राऽलस्यं विपाकश्च गुरुगात्रातिमूत्र(ता) ॥

आमज्वरस्य लिङ्गानि च दद्यात्तत्र भेषजम् ॥२४९॥

**(पच्यमानज्वरलक्षणम्)**

ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।

मलप्रवृत्तिरुत्क्लेशं पच्यमानस्य लक्षणम् ॥२५०॥

**(निरामज्वरलक्षणम्)**

क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।

मलप्रवृत्तिरुत्साहो निरामज्वरलक्षणम् ॥२५१॥

**(आमज्वरलक्षणम्)**

पच्यमाने निरामे च भेषजं दापयेत्कचित् ।
क्वचिदामज्वरे प्रोक्तं स्वरसंसिद्धसम्मतम् ॥२५२॥

**(ज्वरोपद्रवाणि)**

श्वासमूर्छाऽरुतिच्छर्दितृष्णातीसार...ऊहः(?)(हिः) ।
हिक्का श्वासोऽङ्गभेदश्च ज्वरस्योपद्रवादश ॥२५३॥

**(कालज्वरलक्षणम्)**

सतक्षकोन्मत्तविषं प्रतप्तं फूत्कारवेगाच्चलितं कुध्रैः ।
कापिर्हिमे सागररम्यभूते कालज्वरं नानिलमिश्रकाले ॥२५४॥
दाहस्वेदक्लमश्वासो हृदि सञ्जातविभ्रमः ।
उत्तानशयनश्यामजिह्वा कालज्वरे नृणाम् ॥२५५॥

**(स्फोटकज्वरलक्षणम्)**

स्याद्विसर्पाभिघातं तैर्दोषैर्दूष्यैश्च शोफवत् ।
त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात् ॥२५६॥
तत्र वातात्परी ...र्पिवातज्वरसमव्यथः ।
शोफस्फुरणनिस्तावभे यामार्तिहर्षवान् ॥२५७॥
पित्ताद्द्रुतगतिः पित्तज्वरव्यङ्गोऽतिलोहितः ।
तथा कण्डूयतिस्निग्धः कफज्वरसमानरुक् ॥२५८॥
विसर्पः कासवैवर्ण्यज्वरमूर्छाङ्गभङ्गवान् ।
भ्रमास्य शोषहृल्लासदेहसादातिसारवान् ॥२५९॥

(बाहटे)

लवणाम्लकटूष्णादिसंसेवादोषकोपतः ।
विरस्पस्सप्तधाज्ञेयस्सर्वतस्स विसर्पणात् ॥२६०॥

त्वङ्मांसशोणितगताः कुपिताश्च दोषाः
सर्वाङ्गचारिणमिहोत्थितमामलिङ्गम् ॥२६१॥
कुर्वन्ति विस्मृतमनुन्नतमाशुशोफं
तत्सर्वतोऽपसरणाच्च विसर्पमाहुः ॥२६२॥

विसर्पस्सर्पणो शोफे विसृतोऽनुन्नतो स्थितः ।
वातात्कृष्णारुणस्फोटज्वररुग्भेदसंयुतः ॥२६३॥
पित्ताच्छीघ्रतरो रक्तः स्फोटदाहज्वरान्वितः ।
कफात् स्निग्धः सितस्फोटज्वरकण्ड्वाद्युपद्रवाः ॥२६४॥
द्वित्रिजे द्वित्रिलिङ्गस्स्याच्छावलोहितपित्तता ।
सन्निपातसमुत्थश्च सर्वरूपैस्समन्वितः ।
क्षतजो रक्तपित्ताभ्यां श्यावलोहितपित्तवान् ॥२६५॥
पाकदाहज्वराटोपकुक्षिस्फोटैश्चितो मतः ।
अग्निदग्धैरिव स्फोटैश्शान्ततागारारुणास्पदः ॥२६६॥
दाहतृष्णादिमान् ज्ञेयो वातपैत्यादि रेगिणः ।
पाण्डुपित्तारुणाच्छेदो मेचकी कफपित्तजः ॥२६७॥
मलिनोष्णश्रमस्वेदकर्दमः कर्दमोपमः ।
एकदोषास्त्रयस्साध्यो शेषास्सारतरास्स्मृताः ॥२६८॥

उभयान्ताश्रितास्सर्वे मर्मगाश्च विशेषतः ।

विस्फोटज्वरपाकाद्यस्त्याज्यः क्षतविसर्पकः ॥२६९॥

**(सारसङ्क्षेपे)**

आदावेव विसर्पेषु हितं लघु न रूक्षणम् ।

रक्तावशोको वमनं विरेकं स्नेहनं तु नः ॥२७०॥

**(मसूरिकालक्षणम्)**

मसूरिका चाष्टविधेत्युदभ्रेण प्रकीर्तिताः ।

मसूरिका सर्षपिका व्यञ्जका कोद्रवस्तथा ॥२७१॥

कङ्कुविस्फोटको पाकी विसर्पिश्चाष्टमी स्मृता ।

शोषकण्डूज्वरा ताम्रा सूक्ष्मामाहुर्मसूरिकाम् ॥२७२॥

सर्षपाकृति तद्वर्णे दाहपाकरुजावतीम् ।

रक्ताभमूत्रां दुस्साध्यां पित्तात्सर्षपिकां जगुः ॥२७३॥

काळायसदृशां गाढां शाखासन्ध्यास्य शोफिनीम् ।

दाहक्लिन्नव्रणोपेतामजकां श्लेष्मपित्तजाम् ॥२७४॥

कोद्रवं क्रोद्रवाकारं रक्तपैत्यसमुद्भवम् ।

कङ्कूतण्डुलसङ्काशैर्निरन्तरविसर्पिभिः ॥२७५॥

स्फोटैः श्लेष्मसमुद्भूतैरापूर्णं कङ्कुरिष्यते ।

अग्निदग्धैरिव स्फोटैराकीर्णकफपित्तजः ॥२७६॥

निर्विपाको विसर्पस्तु विस्फोटकमिति स्मृतः ।

अपाकं विरसं शुष्कं जानीयान्मृत्युसन्निभम् ॥२७७॥

विसर्पवत्सर्पति सर्वगात्रे शोफान्विता सा ज्वरदाहयुक्ता ।
विसर्पिणी चेति समानवर्णा कालोपकल्पा कफपित्तजाता
॥२७८॥

मसूरा कृतसंस्थाना सर्वगात्रसमन्विता ।
मसूरिकेति विज्ञेया पिटकाज्वरसंयुता ॥२७९॥
विदाहकम्पातिरुजातिसारैस्तृष्णातिहिक्काऽरुचिकासमोहैः ।
युक्तानि हन्त्याशु मसूरिकाऽन्तमुखा च बाह्ये किणसन्निभाऽसून्
॥२८०॥

**(सारसङ्क्षेपमस्ति, तदेवाह)**

मसूरिकाख्या मर्त्यानां रोगाः पञ्चविधाः स्मृताः ।
श्लेष्मिका वातिकाश्चैव पैत्तिकास्सन्निपातिकम् ॥२८१॥
रक्तजश्चेति विख्यातास्तासां लिङ्गानि मे शृणु ।
कठिनाः कृष्णपर्यन्ताः सङ्कीर्णाः श्वेतपाकिनः ॥२८२॥
श्लेष्मका इति विख्याताः शीतज्वरनिपीडिताः ।
कळायवर्णा निस्तोदरुजाश्चिमिचिमाकुलाः ॥२८३॥
अनवस्थितपाकाश्च वातिकाः परिकीर्तिताः ।
ताम्राः स्फोटास्सदाहाश्च दाहज्वरनिपीडिताः ॥२८४॥
द्व्यहात्त्र्यहाच्च पच्यन्ते पैत्तिका पिटकाः स्मृताः ।
त्रिदोषलिङ्गैस्संलक्ष्याः सन्निपातकळाः स्मृताः ॥२८५॥
वैशेषाः कठिना श्यावा रक्ता वा मण्डलाकृतिः ।
सन्निपातैरभिहिता ज्वरदाहसमन्विताः ॥२८६॥

अन्तर्मुख्या मृत्युकल्पा कीर्तितास्ता मसूरिकाः ।
सर्वगात्रेषु सङ्कीर्णास्सज्वरास्स्युर्मसूरिकाः ॥२८७॥
अन्तर्वक्त्रा किणाभाश्च स्फोटान् सोपद्रवांस्त्यजेत् ।
अन्तः प्रभेदिनो ये तु शोणितं प्रस्रवन्ति च ॥२८८॥
तृष्णा श्वाससमायुक्तास्ते शीघ्रं हन्त्यसून्नृणाम् ।
पित्तश्लेष्महरश्चापि विधिस्सर्वत्र शस्यते ॥२८९॥
पित्तरक्तसमुत्थानां शिराव्यधनमिष्यते ।
मसूरिकान् सविस्फोटान् पित्तविसर्पवच्चिकित्सेत्यादि ।
मसूरिकाग्ररूपेषु लङ्घनं समनन्तरम् ।२९०॥

**(अतिसारनिदानम्)**(१)

गुरुस्निग्धातिरूक्षोष्णद्रवमांसातिशीतलैः ।
शोमुष्णाम्बुमद्यानि पानस्वात्मविपर्ययैः ॥
क्रिमिदोषादजीर्णाद्वा ह्यतिसारो भवेन्नृणाम् ॥२९१॥

---

(१)क्षीरमत्स्यादि यद्भुक्तं तद्विरुद्धाशनं मतम् ।
भुक्तस्योपरि यद्भुक्तं तदध्यशनमुच्यते ॥
गुर्वतितस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ।
विरुद्धाध्यशनाजीर्णैर्विषमैश्चादिभोजनैः ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ।
शोकदुष्टाम्बुमद्यातिपानैः सात्म्यविपर्ययैः ॥
जलाभिरमणैर्वेगविघातैः कृमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥– इति योगरत्नाकरे

**(अतिसारपूर्वगुणम्)**

हृन्नाभिपायुकुक्षौ च तोदा वातनिरोधतः ।
विपाकोध्मानविड्भङ्गं ज्ञातव्यं पूर्वलक्षणम् ।।२९२।।

**(वातातिसारलक्षणम्)**

फेनं च श्यामविमलं नाभ्यावस्थानशूलकम् ।
सर्वावयवशैथिल्यं जृम्भणं च मुहुर्मुहुः ।
सकृद्बद्धमलं तुल्यं वातातीसारलक्षणम् ।।२९३।।

**(पैत्यातिसारम्)**

सारुणोष्णं द्रवं फेनं पीतवर्णं मलं सकृत् ।
सकृदामं च सन्तापं हृच्छूलं दाहमुत्कटम् ।।
स्वेदमूर्छाभ्रमस्तृष्णा पित्तातीसारलक्षणम् ।।२९४।।

---

संशम्यापां धातुरग्निं प्रवृद्धो वर्चोमिश्रो वायुनाऽध प्रणुन्नः ।
सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधं तं वदन्ति ।।
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः ।
केचिच्चाऽहुर्नैकरूपप्रकारं नेत्येवं तं काशिराजस्त्ववोचत् ।।
हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधः ।
विट्सङ्गमाध्यानमथाविपाको भविष्यतस्तस्य पुरःसराणि ।।
अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ।
शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ।।– इति योगरत्नाकरे

**(श्लेष्मातिसारम्)**

आमं श्वेतं मलं फेनं कासश्वासमरोचकम् ।
किञ्चिन्मूत्रं कुक्षिशूलं श्लेष्मातीसारलक्षणम् ।।२९५।।

**(आमातिसारलक्षणम्)**[१]

अतिसारो हि भूयिष्ठं भवेदामाशयं तथा ।
मन्दाग्निं वातसंयुक्तं पाकः स्याल्लङ्घनं हितम् ।।
शूलदाहप्रसेकार्तिमामयेदतिसारिणे ।।२९६।।

**(प्रवाहिकातिसारलक्षणम्)**[२]

आमे परिणतैर्यस्तु मन्दाग्निं चातिसाध्यते ।

---

(१)संसृष्टमेभिर्दोषैस्तु न्यस्ततमप्स्ववसीदति ।
पुरीषं भृशदुर्गन्धि पिच्छिलं चाऽऽत्मसज्ज्ञितम् ।।
आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः ।
अपक्वाहारधातुर्यः स आम इति सज्ज्ञितः ।।
ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।
दुष्टमामाशयगतं रसमामं प्रचक्ष्यते ।। – इति योगरत्नाकरे

(२)वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य ।
प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ।।
प्रवाहिका वातकृता सशूला पित्तात्सदाहा सकफा कफाश्च ।
सशोणिता शोणितसम्भवा च ताः स्नेहरूक्षप्रभवा मतास्तु ।।
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ।। – इति योगरत्नाकरे

स फेनपिच्छं सरुजं सविड्बन्धे पुनः पुनः ॥
अल्पाल्पमल्पकमलं लक्षणं च प्रवाहिके ॥२९७॥

**(ज्वरातिसारलक्षणम्)**

ज्वरसन्तापहृच्छूलमरोचकविरेचनम् ।
आमं वा शोणितं वापि ज्वरातीसारमुच्यते ॥२९८॥

**(दोषातिसारलक्षणम्)**

अन्तर्दाहं बहिश्शीतं करपादं च शीतलम् ।
प्रलापं छर्दि हिक्का च कासश्चातिविरेचनम् ॥२९९॥
कम्पो विभ्रमहृल्लासो जृम्भणं जागरं मदम् ।
आमं रक्तं च हृच्छूलं दोषातीसारनाशनम् ॥३००॥
वहा(?)हस्नेहमांसाम्बुसदृशं कृष्णरूपिणम् ।
नानावर्णमतीसारं कृच्छ्रसाध्यं त्रिदोषजम् ॥३०१॥

**(असाध्यातिसारलक्षणम्)**[१]

एरण्डतैलवर्णं च मांसमाक्षिकयोस्तथा ।
स्वरहीनं च दुर्गन्धमसाध्यमतिसारयोः ॥३०२॥

---

(१)नात्युपद्रवतायुक्तं नातिदुष्टेषु धातुषु ।
बाले वृद्धेऽप्यसाध्योऽयं रूपैरेतैरुपद्रवैः ॥
अपि यूनामसाध्यः स्यादतिदुष्टेषु धातुषु ।
लशुनकुणपगन्धं पूतिगन्धं धनं वा
पललजलसमानं पक्वजम्बूफलाभम् ।
घृतमधुपयआभं तैलशैवालनीलं
सुघनदधिसवर्णं वर्जयेज्ज्वातिसारम् ॥ – इति योगरत्नाकरे

मिश्रं च कृष्णवर्णं च बहुवर्णं च रक्तकम् ।
दुर्गन्धं मधुवर्णं च असाध्यमतिसारके ॥३०३॥

**(वातग्रहणीलक्षणम्)**

कण्ठाऽस्य शोषहृत्पीडा तृष्णा कासविषूचिका ।३०४॥

**(ग्रहणी वातजा ज्ञेया)**[१]

अन्ने जीर्णे सदा ध्मानं भुक्ते स्वस्थं क्षणं भवेत् ।
चिराद्वते स्रवं शुष्कं सामं शब्दं सफेनिलम् ॥३०५॥
सङ्ग्रहे सङ्ग्रहे स्रावं कासश्वासमजीर्णता ॥
ग्रहणी वातजा ज्ञेया दीपनैस्तमुपाचरेत् ॥३०६॥

---

(१)कटुतिक्तकषायातिरूक्षसन्दुष्टभोजनैः
प्रमिताशनात्यर्थवेगनिग्रहमैथुनैः ॥
मारुतः कुपितोवह्निं सञ्छाद्य कुरुते गदान् ।
तस्यान्नं पच्यते दुःखं शुष्कपाकः खराङ्गता ॥
कण्ठास्य शोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ।
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विषूचिका ॥
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ।
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥
जीर्णे जीर्यतिचाऽऽध्मानं भुक्ते स्वास्त्यमुपैति च ।
सवातगुल्महृद्रोगप्लीहाशङ्कीच मानवः ॥
चिराद्दुःखंद्रवं शुष्कं तन्वामं शब्दफेनवत् ।
पुनःपुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥– इति योगरत्नाकरे

**(पैत्यग्रहणीलक्षणम्)**(१)

...त्यम्लोद्गारहृत्कण्ठदाहतृट् श्वासमक्लमः ।
अजीर्णानिलपित्ताभं पित्तात्सारसमद्रवम् ।
शमयेद्वातपित्तोत्थं रेचयेत्सप्रवाहिकम् ।
मधुरैश्शीतलैर्द्रव्यैर्नातिरूक्षैरुपाचरेत् ॥३०७॥

**(श्लेष्मग्रहणीलक्षणम्)**(२)

कासं निष्ठीवनं मूर्छा मधुरास्यमरोचकम् ।
भिनाश्लेष्मसंमिश्रो साध्यते चोदरं गुरु ॥३०८॥
दुष्टो मधुरमुद्गारः पीनसं च कफाधिके ।
श्लेष्मणे पञ्चकर्माणि कर्तव्यं बलवत्तरे ॥३०९॥

---

(१)कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ।
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥
सौऽजीर्णं नीलपीताभं पीताभः सार्यतेद्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥– इति योगरत्नाकरे
(२)गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥
तस्यान्नं पच्यते दुःखं हृल्लासच्छर्दरोचकाः ।
आस्योपलेपमाधुर्यकासष्ठीवनपीनसाः ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितिं गुरु ।
दुष्टोमधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चः प्रवर्तनम् ।
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥– इति योगरत्नाकरे

बलहीनज्ञेन कर्तव्यं दीपनपाचनम् ।
क्षीणक्षामशरीरस्य दीपनं स्नेहसंयुतम् ।।३१०।।
कर्तव्यं वैद्यनाथेन रोगिणः श्लेष्मशान्तये ।
मिश्रितो द्वन्द्वजो ज्ञेयो त्रिदोषा सर्वरूपिणी ।।३११।।

**(आमग्रहणीलक्षणम्)[१]**

आमस्रावं सपिच्छल्यं स्निग्धं शुभ्रं घनं स्रवे ।
ग्रहणी सामवातेन दुश्चिकित्सो भिषग्वरः ।।३१२।।
ग्रहण्यां पाचनं पुण्यं मध्ये लङ्घनपाचनम् ।
अन्तेऽग्निदीपनं दद्यादतिसारेऽप्ययं विधिः ।।३१३।।

**(ग्रहणीपूर्वलक्षणम्)**

चिराद्भुक्तस्य पाकं च ग्रहणीपूर्वलक्षणम् ।।३१४।।

**(विषूचिलक्षणम्)**

अनाहशूलभ्रममोहकम्पदाहादिशीतज्वरतृट्प्रलापाः ।
छर्दिप्रसेकाङ्गगुरुत्वशीतं लिङ्गं विषूचीष्वमलादिजासु ।।३१५।।

**(अजीर्णलक्षणम् - वाताजीर्णम्)**

विष्टम्भो वमनं भ्रान्तिरुद्गारः पूतिगन्धकः ।
मुखशोषस्तृषार्तिश्च वाताजीर्णस्य लक्षणम् ।।३१६।।

---

(१)अत्रकुजनमालस्यं दौर्बल्यं सदनं भवेत् ।
द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत् ।।– इति योगरत्नाकरे

**(पैत्याजीर्णलक्षणम्)**

रेचनं जठरे शूलं वमनं च मुहुर्मुहुः ।

हस्तपादातिसङ्कोचं पित्ताजीर्णस्य लक्षणम् ।।३१७।।

**(श्लेष्माजीर्णम्)**

विष्टम्भो रेचनं देहवेदनं च प्रशस्यते ।

वान्तिभ्रान्तिर्मुहुः स्वेदो जडता शैत्यता क्लमः ।।

काष्ठवज्जायते देहं कफाजीर्णस्य लक्षणम् ।।३१८।।

**(चतुर्विधजीर्णलक्षणम्)**

चतुर्विधं भवेदेतदजीर्णविषमाशनात्(?)।

धूमो विधूमो विस्पष्टो रसशेषश्चतुर्विधः ।।३१९।।

धूमे स्वभावगन्धस्स्यात् विधूमे चाम्लगन्धता ।

विस्पष्टे चाङ्गवैकल्यं रसशेषे शिरोव्यथा ।।३२०।।

धूमे तु वमनं कार्यं विधूमे तु पयः पिबेत् ।

विस्पष्टे पार्ष्णिदाहं च रसशेषे सुखं स्वपेत् ।।३२१।।

**(उत्सुकाजीर्णलक्षणम्)**

यस्याहारं समालोक्य यः कश्चिदपि मानवः ।

समुत्सुके न लभते तस्य भुक्तं न जीर्यति ।।३२२।।

चिरेणाप्यग्निवेशो वा कोष्ठे शल्यस्य निष्ठितः ।

आम्लोत्सारररुजो पच्यमानाहाटोपनादिकान् ।।३२३।।

विकारान्कुरुते कष्टान्बहूपद्रवसंयुतान् ।
ग्रहणीगुल्पदोषं वा चिरेणैव विवर्धयेत् ।।३२४।।
आमचिन्ता भृशं कष्टमुत्सुकाजीर्णलक्षणम् ।
पूर्वं ताद्दशमाहारं भोजयेदुत्सुकान्तरम् ।।३२५।।

**(अजीर्णज्वरलक्षणम्)**(१)

ज्वरो गुम्भनहिक्का च मन्दाग्निर्जानुनि व्यथा ।
आम्लस्वभावगन्ता च अजीर्णज्वरलक्षणम् ।।३२६।।

**(अर्शरोगलक्षणम्)**

अर्शांसि षट्प्रकाराणि रक्तदोषस्वभावतः ।

---

(१)कषायकटुतिक्तानि रूक्षशीतलघूनिच ।
प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम् ।।
लङ्घनं देशकालौच शीतौ व्यायामकर्मच ।
शोकोवातातपस्पर्शोहेतुर्वातार्शसां मतः ।।
कट्वम्ललवणोष्णानि व्यायामग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधोमद्यमसूयनम् ।।
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ।।
मधुर स्निग्धशीतानि लवणाम्लगुरूनि च ।
अव्यायामदिवास्वप्नशैय्यासनसुखे रतिः ।।
प्राग्वातसेवाशीतौच देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् ।।
हेतुलक्षणसंसर्गाद्विद्याद्वन्द्वोल्बणानि च ।
सर्वोहेतुस्त्रिदोषाणां सहजलैर्लक्षणैस्समम् ।। – इति योगरत्नाकरे

जायते मारुतात्पित्तात्कफाद्धुदपवित्रये ॥३२७॥
रक्तदोषोत्थिता बाह्ये सुखसाध्यं चिरोत्थितम् ।
द्वन्द्वजायां द्वितीयायां कृच्छ्रसाध्यं भिषग्वरः ॥३२८॥
अन्तर्वर्तित्रिदोषोत्था न साध्यर्शांसि वा क्वचित् ।
कुर्वन्ति सर्वगात्राणि तत्स्याद्यत्नेन तं जयेत् ॥३२९॥

**(अर्शरोगपूर्वलक्षणम्)**(१)

विष्टम्भः कुक्षिराटोप आतङ्काग्रहणीरिव ।
कार्श्यमुद्गारबाहुल्यं पूर्वलक्षणमर्शसाम् ॥३३०॥
परहृत्क्लेशकरणं गुरुद्वेषश्च गोवधः ।
देवद्विजस्वहरणं ग्रहणे स्त्रीषु सङ्गमम् ॥३३१॥
वि ..... चारकरणमन्नापकरणं तथा ।
एवमष्टनिदानानि प्रोक्तान्यर्शोगदस्य तु ॥३३२॥

**(वातार्शनिदानम्)**

कटुतिक्तकषायातिरूक्षतीक्ष्णातिशीतलैः ।
भोजनैर्लङ्घनैर्वापि मद्यमैथुनसेवनैः ॥३३३॥
जायते ह्यङ्कुराश्शुष्काः स्याच्चेन्निचि च मारणाः ।
बिम्बसर्षपकार्पासबीजवद्धटिकाननाः ॥३३४॥

---

(१)विष्टम्भोऽङ्गस्यदौर्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यम् सक्थिसादोऽल्पविट्कता ॥
ग्रहणीरोगपाण्ड्वर्थिराशङ्काचोदरस्य च ।
पूर्वरूपाणिनिर्दिष्टान्यर्शसामभिवृद्धये ॥ – इति योगरत्नाकरे

सशब्दमामसंयुक्तं तोदं वाथ प्रवाहिकम् ।
विष्टम्भो वेदना शूला नानारोगश्च वातजे ॥
भोजनं स्निग्धमुष्णं च मर्दनं च प्रशस्यते ।३३५॥[१]

(पित्तार्शनिदानम्)[२]

अत्युष्णतीक्ष्णकट्वाम्लभोजनं वाऽथ भेषजम् ।
सेवनात्स्रवते रक्तं नीलपीतोष्णवर्चसः ॥३३६॥

---

(१)गुदाङ्कुराबह्वनीलाः शुष्काश्चिमिचिमान्विताः ।
म्लानाहश्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥
मिथोविसदृशा वक्रास्तीक्ष्णाविस्फुटिताननाः ।
बिम्बीकर्कन्धूखर्जूरकार्पासीफलसन्निभाः ॥
केचित् कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।
शिरःपाशासकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ।
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥
तैरार्तोग्रन्थितंस्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्टीलासम्भवस्तत एव च ॥ – इति योगरत्नाकरे
(२)पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ।
तन्वस्रस्राविणोविस्रास्तनवो मृदवः श्लथाः ॥
शुकजिह्वायकृत्खण्डजलौकावक्त्रसन्निभाः ।
दाहपाकज्वरस्वेदतृण्मूर्छारतिमोहदाः ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ।
यवमध्या हरित्पीतहरिद्रत्वङ्नखादयः ॥ – इति योगरत्नाकरे

रक्तानिले सिता पीता मृदवश्चाङ्कुरा बहु ।
दाहमूर्छाज्वरस्वेदतृष्यन्तः पित्तजार्शसाम् ।।३३७।।

**(श्लेष्मार्शनिदानम्)**[१]

अतिशीतगुरुस्निग्धक्षाराम्लमतिसेवनात् ।
श्लेष्मोल्बणस्थिरा शुभ्रपिच्छिला गोस्तनोपमाः ।।३३८।।
स्पर्शकण्डूप्रियस्निग्धनानारोगकरं किल ।
वसातुल्यकफप्रायपुरीषस्सप्रवाहिकः ।।३३९।।
ज्ञेयो श्लेष्मार्शसाम्येषा तत्र मोक्षस्सुखावहा ।
श्लेष्मार्शसा गुदे पार्श्वे रक्तमोक्षं जलूकया ।।३४०।।
गुदद्वारात्पृष्ठदेशो जायते पाण्डुराङ्कुरा ।
स्नेहलिप्ता न(व)? शिष्यन्ते मूलरोगस्य लक्षणम् ।।३४१।।

---

(१)श्लेष्मोल्बणा महामूल घना मन्दरुजः सिताः ।
उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ।।
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करिरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ।।
वङ्क्षणाहिनः पायुबस्तिनाभ्यवकर्षिणः ।
सकासश्वासहृल्लास रसेकारुचिपीनसाः ।।
मेहकृछ शिरोजाड्यशिशिरज्वरकारिणः ।
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ।।
वसाभाः सकफप्राज्यपुरीषाःसप्रवाहिकाः ।
नस्रवन्ति नभिद्यन्ते पाण्डुस्निग्धत्वगादयः ।।- इति योगरत्नाकरे.

मिश्रजा मिश्रिता ज्ञेया सर्वलिङ्गास्त्रिदोषजाः ।
न स्रवन्ति न भिद्यन्ति स्निग्धपाण्डुत्वगादयः ॥३४२॥
रक्तोल्बणे गुदे कीला रक्ताहा पित्तवद्रुजाः ।
बिला न कुण्डिता स्रावमधोवायुर्न गच्छति ॥३४३॥
वातपित्तकफान्मिश्रद्वन्द्वजाश्च त्रिदोषजाः ।
लक्षणैः पूर्ववद्ज्ञात्वा चिकित्सा कारितार्शसाम् ।
जलूकैस्सूचिता श्शस्त्रैर्मोचयेद्रक्तमर्शसाम् ॥३४४॥

**(असाध्यार्शनिदानम्)**

हस्तपादमुखे नाभ्यां शाखावृषणयोर्गुदे ।
हृत्पार्श्वं शूलमेहश्च छर्दितृष्णाज्वरारुचिः ।
रक्तातिसारकासं च अर्शांसि मारयन्ति तम् ॥३४५॥

**(मेहनिदानम्)**

**(मेहाग्रलक्षणम्)**

मधुरास्यं तृषा दाहो दन्तानां मलसञ्चयम् ।
देहे चिक्कणतोयातिदाहस्स्यात्पाणिपादयोः ॥३४६॥
प्रभूताविलमूत्रत्वं मेहलक्षणमग्रजम् ।
नवान्नदधिमद्याम्बुगुडधूमनिषेवणात् ।
दूषयन्ति पलं मेदः शुक्लमज्जावसारजः ॥३४७॥
विंशेनेह प्रजायन्ते दश साध्याः कफास्थिताः ।
याप्या पित्ताश्रिताः षट्च असाध्या मारुतस्य तु ॥३४८॥

उदकेक्षुस्सान्द्रसुरास्सिकता शुक्लशीतकम् ।
ओष्ठलालातिमूत्रं च क्षारहारिद्ररक्तजम् ॥३४९॥
मञ्जिष्ठा नीलकाळं च वसामज्जामधूत्थितम् ।
अस्थिमेहं विंशतिश्च जात्या वर्णेन लक्षयेत् ॥३५०॥

**(बहुमूत्रलक्षणम्)**

शोफस्तापोऽङ्गकार्श्यं च बहुमूत्रं तृषा भ्रमः ।
अस्वास्थ्यं सर्वगात्रेषु मेहोऽयं बहुमूत्रकम् ॥३५१॥

**(उदकमेहम्)**

अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम् ।
मेहत्युदकमेहेन किञ्चिदाविलपित्तजम् ॥३५२॥

**(इक्षुमेहम्)**

इक्षोरसमिवात्यर्थं मधुरं चेक्षुमेहकम् ।

**(सान्द्रमेहम्)**

सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति ॥३५३॥

**(सुरामेहम्)**

सुरामेही सुरातुल्यमपि ह्यच्छमधोघनः ॥

**(पिष्टमेहम्)**

संसृष्टरोमा पिष्टेन पिष्टवद्बहुळं सितम् ।
शुक्लाभं शुक्लमिश्रं वा शुक्लमेहः प्रमेहति ॥३५४॥

## (सिकतामेहम्)

## मूत्रं तु सिकतामेही सिकतारूपिणा महान् ।।

---

अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम् ।
मेहत्युदकमेहेन किञ्चिदाविल पिच्छिलम् ।।
त्पर्युषितं सान्द्रमेहेन मेहति ।।
सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ।।
संसृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ।।
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ।।
मूत्राणून्सिकतामेही सिकतारूपिणो मलान्.।।
शीतमेहीसुबहुशो मधुरं भृशशीतलम् ।।
शनैःशनैः शनैर्मेहीमन्दमन्दं प्रमेहति ।।
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ।।
एवं दश श्लेष्मजाः ।।
गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।।
नीलमेहेन नीलाभं कालमेही मषीनिभम् ।।
हरिद्रमेही कटुकं हरिद्रासन्निभं दहत् ।।
विस्रं मञ्जिष्टमेहेन मञ्जिष्टासलिलोपमम् ।।
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।।
एवं षट्पैत्तिकाः।।
वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ।।
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ।।
कषायं मधुरं रूक्षं क्षौद्रमेहेन मेहति ।।
हस्तीमत्त इवाजस्रं मूत्रं वेगविवर्जितम् ।।
सलसीकं विबद्धं च हस्तिमेही प्रमेहति ।। - इति योगरत्नाकरे.

**(शीतमेहम्)**

शीतमेही सुबहुशो मदुरं भृशशीतलम् ।।३५५।।

शनैश्शनैश्शनैर्मेही मन्दं मन्दं प्रमेहति ।

**(लालामेहम्)**

लालातन्तुयुतं मूत्रं लालामेहेन पिच्छ(च्छि)लम् ।।३५६।।

**(क्षारमेहम्)**

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ।

**(नीलमेहम्)**

नीलमेहेन नीलाभं कालमेही मषीनिभम् ।।३५७।।

**(हरिद्रामेहम्)**

हरिद्रमेही कटुकं हरिद्रासन्निभं वहन् ।

**(मञ्जिष्ठमेहम्)**

विस्रं मञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ।।३५८।।

**(रक्तमेहम्)**

विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ।।

**(वसामेहम्)**

वसामेही वसामिश्रं वसां वा मूत्रयेन्मुहुः ।।३५९।।

**(मज्जामेहम्)**

मज्जाभं मज्जमिश्रं वा मज्जामेही मुहुर्मुहुः ।।

**(हस्तिमेहम्)**

हस्तीमत्त इवाजस्त्रं मूत्रं वेगविवर्जितम् ।

सारसिकं विबन्धं च हस्तिमेही प्रमेहति ॥३६०॥

**(मधुमेहम्)**

मधुमेहीमधुसमं जायते स किल द्विधा ।

कृद्धातु क्षयाद्वायौ(यु)? दोषात् नृपदेऽथवा ॥३६१॥

अनृता दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ।

क्षीणाक्षणात्पूर्णो(?) भजते कृच्छ्रसाध्यताम् ॥३६२॥

कालेनोपेक्षितास्सर्वे यद्यान्ति मधुमेहताम् ।

मधुरं यच्च मेहेषु प्रायो .......... मर्हति ॥३६३॥

सर्वे च मधुमेहाख्या मधुरा च ततो नरः ।

उदकेक्षुरसान्द्रश्च सुरापिष्टकशुक्लकैः ॥३६४॥

सिकता सितमन्दैश्च लालामेहकफाद्दश ।

क्षारकालानलशितामञ्जिष्ठा शोणपैत्तिके ॥

वाताद्वसामज्जहस्ति मधुमेहश्चतुर्विधः ॥३६५॥

**(प्रमेहावस्थाः)**

प्रथमं त्वस्थिभिन्नं च द्वितीयं मलबन्धनम् ।

तृतीयमस्थिरूक्षं च चतुर्थं मूत्रघातकम् ॥३६६॥

पञ्चमं धातुनाशं च षष्ठं च मधुमेहकम् ।

सप्तमं ग्रन्थिरुत्पन्नमष्टमं वातकोपनम् ॥३६७॥

नवमं त्वतिसारं च दशमं संज्ञनाशनम् ।

इत्येते विंशतिर्मेहास्सद्योमरणमादिशेत् ।।३६८।।

अविपाकोऽरुचिच्छर्दिर्निद्राकासस्सपीनसः ।

उपद्रवाः प्रजायन्ते मेहिनां कफजन्मनाम् ।।३६९।।

वस्तिमेहनयोस्तोदोमुष्कावधरणं चरः ।

दाहतृष्णाक्लमो मूर्छा विड्भेदः पित्तजन्मनाम् ।।३७०।।

शिराविकारच्छविका जालिनी विनतालजा ।

मसूरिका सर्षपिका पुत्रिणी सविदारिका ।।३७१।।

विदध्रिश्चेति पिटकाः प्रमेहोपद्रवा दश ।

सन्धिमर्मसु जायन्ते मांसजेषु सुदामसु ।।३७२।।

पिटका मर्महृत्पृष्ठस्तनां सगुदमूर्ध्वगाः ।

पर्वपादकरस्थो वा मेहोत्साहं प्रमेहिणाम् ।।३७३।।

**(मूत्रकृच्छ्रनिदानम्)**

व्यायामतीक्ष्णरुक्षाम्लमद्यमत्स्यातिसेवनात् ।

अजीर्णादतिवेगाच्च मूत्रकृच्छ्राऽष्टधा भवेत् ।।३७४।।

**(वातकृच्छ्रनिदानम्)**

मूत्रकाले भवेत्पीडाकर्षान्मूत्रयते बहून् ।

मेढ्रमक्षो वेदना च कृच्छ्रं वाताधिकं भवेत् ।।३७५।।

**(पैत्य(पित्त)कृच्छ्रम्)**

पित्तरक्तं सरुग्वाहं मूत्रकृच्छ्रं सपित्तजम् ।

कफजे रक्तमेढ्रं च गुरूगौरवशोफवान् ।।३७६।।

सपिच्छलं विगन्धं च सर्वलिङ्गं त्रिदोषजम् ।

(दोषकृच्छ्रलक्षणम्)

वातपित्तकफैश्छिन्नं यदुक्तं च पृथक्पृथंक् ॥३७७॥

तत्समस्तं भवेद्यस्य तत्कृच्छ्रं सन्निपातजम् ।

(अश्मरीकृच्छ्रलक्षणम्)

आध्मानं वातशूले च मूत्रसङ्गं करोति च ॥३७८॥

अश्मरीहेतुतत्पूर्वं मूत्रघातमिदं भवेत् ॥

सशुक्लं मूत्रविट्कृच्छ्रं लक्षणं चात्तदीयथा(स्यात्तर्दायकम्)

॥३७९॥

(वातकुण्डलिकृच्छ्रम्)

मूत्रमल्पाल्पयोदार्ते आध्मानं गुरवस्तयोः ।

सरुजं मूत्ररोधं च कृच्छ्रोऽयं हितकुण्डली ॥३८०॥

(वस्तिकृच्छ्रलक्षणम्)

वेगं विदाहविव्यस्तु मूत्रसङ्कुपितो भवेत् ।

पीडिते वस्तिकुक्षौ च कृच्छ्रोऽयं वस्तिकं लघु ॥३८१॥

मूत्रं हरितपित्तं वा घनं श्वेतं च चूर्णवत् ।

शूलस्यन्दनदाहार्तो बिन्दुबिन्दुस्रवत्यपि ॥३८२॥

असाध्योऽयं विजानीयादभिघातं सुदुस्सहम् ॥

दन्तान्खादति वेपते च रुजया मृद्वादिलिङ्गं कणं

नाभिं पीडयति प्रमेहति मुहुर्मूत्रं सरुग्बिन्दवः ।

मुञ्चन्तेष्वमलं समानिलचयं श्यावातिरूक्षारुजं
कुर्वन्त्यम्बुजकण्टकैरिव शिता तावेव जाताश्मरी ॥३८३॥

(सोमरोगनिदानम्)

शोकाच्छ्रमाद्वा वनितातिसङ्गात्
गरेण चापक्षुभितान् स्रवन्ति ।
देहस्थिता वस्तिमुखं प्रसन्ना
निरुक्करानिर्गतगन्धवर्णाः ॥३८४॥
शीतास्थिता तेन मुखोष्णतासु शोषः शिरस्तोदमशक्तिता च ॥
जिह्वाप्रलेपाविविधैश्च भक्ष्यैरतृप्तिरालस्यमतीव तृष्णा ॥३८५॥
भवेद्देहक्षयाद्देहे सुतरां कष्टमामयम् ।
सोमरोगमिति ख्यातं देहे सोमक्षयं नृणाम् ॥३८६॥

(रक्तप्रदरनिदानम्)

शोकोपवासादतिमैथुनाच्च
विदाहिभिश्चास्रमतीव दुष्टम् ।
प्रवर्धते योऽन्ययनादकाले (?)
त्वसृग्वरं तं प्रदरं च विन्द्यात् ॥३८७॥
वातात्सशूलं रुधिरं पित्तान्नीलं ज्वरान्वितम् ।
कफाच्छ्वेतं त्रिलिङ्गं तु त्याज्यं मूर्छाज्वरान्वितम् ॥३८८॥
शुभ्रं रक्तं चाथवा सारवर्णमच्छं विस्रं योनिजं स्रावमाहुः ।
अस्थिस्रावं त्वस्थिमज्जापकर्षम् आन्त्रेयस्थं शोषशूलप्रदं च ॥३८९॥

भवेद्रसविदाहेन यदा तद्वर्णमार्तवम् ।

तदस्थिस्रावमाख्यातमिति काश्यपदर्शनम् ॥३९०॥

उष्णाम्ललवणक्षारकटुभिः पित्तदूषणात् ।

यकृत्प्लीहाश्रितं रक्तमूर्ध्वं चाधः प्रवर्तते ॥३९१॥

ऊर्ध्वं नासाक्षिकर्णास्यं मेढ्रयोनिगुदैरधः ।

कुपितं रोमकूपेषु रक्तपैत्यं तदुच्यते ॥३९२॥

घर्मव्यायामशोकाध्वक्षारशिक्षाम्लसेवनात् ।

तेन पित्तं स्रवेत्क्रुद्धं रक्तं नासाऽस्य कर्णदृक् ॥३९३॥

मेढ्रे योनौ गुदद्वारे कुपितं रोमकूपकैः ।

एकतस्सर्वतो वापि रक्तपैत्यं तदुच्यते ॥३९४॥

(शोणितवर्णम्)

वातार्तेनारुणं रूक्षं सुखमुष्णजलं यथा ।

पित्तार्तो मूत्रवद्रक्तं वसापित्तकषायवत् ॥३९५॥

कफाच्छुभ्रं सपिच्छल्यं सस्नेहम् ऊर्ध्वगं भवेत् ।

मिश्रितं द्वन्द्वजं ज्ञेयं सर्वरूपं त्रिदोषजम् ॥३९६॥

(आम्लपैत्यनिदानम्)

आम्लत्वे ..क्षिरोर्तिज्वरितमिव वपुः कोष्ठहृत्कण्ठदाहः

स्वेदो मूर्छा पिपासा कफसहितमित्र श्वासि शोषो रसस्य ।

नानावर्णश्च तस्मिन् जरणमुपगतिश्चाम्लपित्तस्य वान्तिः

तिक्ताम्लोद्गारकण्डूब्बहुविधपिटकान्मण्डलान्याम्लपित्ते ॥३९७॥

अविपाकः क्लमः केशतिक्तामास्यं च गौरवम् ।
अरुचिः कण्ठहृद्दाहः मेहमूर्छौ कचिद्भ्रमः ॥३९८॥
तिक्ताम्लकटुकोद्गारश्वासहृल्लासतापतृट् ।
प्रलापः पक्षतोदश्च ह्याम्लपित्तस्य लक्षणम् ॥३९९॥
आम्लपित्ते तु वमनं तदन्ते मृदुरेचनम् ।
ऊर्ध्वगं वमनं हन्यादधोगन्धे च नैर्हरेत् ॥४००॥

(शीतपैत्यलक्षणम्)

विस्तीर्णमण्डलैः काले बहुळैश्शोणितप्रभैः ।
तनुं पि(त्त)कफेरुद्धे तनुतः कण्डुसंयुतैः ॥४०१॥
शीतपित्तमिति प्राहुराम्लपित्तं च तं गदः ।
हृल्लासं दृङ्गुरुत्वं च रक्तलोचनतारुचिः ।
छर्दिः शोफः ज्वरः कण्डूः शीतपित्तस्य लक्षणम् ॥४०२॥

(वातरोगनिदानम्)

रूक्षश्शीतोल्पमध्वन्नव्यायामाशोकजागरात् ।
लङ्घनैश्शोणितैस्स्रावैरतिवेगाध्वसेवनैः ॥४०३॥
देहेस्थिताश्शिरास्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान्व्याधीन्सर्वाङ्गैकाङ्गसंश्रयान् ॥४०४॥
सङ्कोचपर्वणस्तम्भो रोमहर्षप्रलापनम् ।
यदा काष्ठाश्रितो दुष्टो वायुर्भवति कोपनः ॥४०५॥
तथैव मारुतो दुष्टो दिग्वहामूत्रवर्चसा ।

गर्भे शुक्ररजोनाशः शिरोनासाक्षिपृष्ठतः ॥४०६॥

मोटनं चैव ग्रीवायाः श्वासं सर्वाङ्गशोधनम् ।

पार्श्वशूलभ्रमानाह कट्यमङ्गेषु सु ...... ॥४०७॥

**(एकाङ्गवातनिदानम्)**

एकस्मिन्देहदेशे च तोदः कार्श्यं चलार्तिता ।

हिमस्पर्शं च ..द्यन्ते ....... एकाङ्गस्य लक्षणम् ॥४०८॥

**(कफवातलक्षणम्)**

दण्डवत् ... भतेयस्तु मन्दाग्नित्वातिशैत्यता ।

अस्वेदमतितन्द्रा च कफवातस्य लक्षणम् ॥४०९॥

.......हगात्राणां रोम संस्फुरयन्ति च ।

शिरोक्षिवदनालस्य(?) शीतवातस्य लक्षणम् ॥४१०॥

**(आमवातलक्षणम्)**

जङ्घोरुत्रिकसन्धीनां व्यथा हृन्ना ...(सा?)दयोः ।

तृष्णा शोभा विषूची च आमवातस्य लक्षणम् ॥४११॥

**(कुब्जवातलक्षणम्)**

कृतमूत्रपुरीषत्वं शूलार्तोऽपि कटिव्यथा ।

त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च कुब्जके ॥४१२॥

**(रक्तवातलक्षणम्)**

श्वयथुस्तीव्रसन्तापः सर्वाङ्गं रक्तवर्णकम् ।

किञ्चित् तोदश्च शोफश्च रक्तवातस्य लक्षणम् ॥४१३॥

**(कम्पवातम्)**

सर्वाङ्गं कम्पते यस्य शिरोभारश्चलाकरः ।

लक्षणं कम्पवातस्य विज्ञेयं तच्चिकित्सकैः ॥४१४॥

**(अर्दितवातम्)**

अर्दितं बहुशेषं च सर्वाङ्गं व्याप्य सञ्चरेत् ।

पानाभ्यञ्जनवस्त्यादि न स्याद्यैवोपशाम्यति ॥४१५॥

**(शोणितवातम्)**

विदाह्यन्नं विरुद्धं च तत्र जासृक्प्रदूषणम् ।

भजतां विधिहीनं च स्वप्नजागरसङ्गमम् ॥४१६॥

प्रायेण सुकुमाराणां पञ्चक्रमणशीलिनाम् ।

अभिघातादशुद्धे च नृणाम  च दूषिते ॥४१७॥

वातलैः शीतलैर्वायुः क्रुद्धक्रुद्धो विमार्गतः ।

तादृशीर्वा ससृक्क्रुद्धे प्राग्वदेव प्रदूषयेत् ॥४१८॥

आढ्यरोगं बुळं वातं बलासं वातशोणितम् ।

तमाहुर्नाम ... पूर्वं पाद ................. ॥४१९॥

**(स्थूलवातनिदानम्)**

अव्यायामदिवास्वप्नश्लेष्मणाहारसेवनात् ॥

अस्नेहै ............ हरति नान्यथा ॥४२०॥

स्फुटत्वं मन्दबुद्धित्वं क्षुद्रकासः क्रमाद्भवेत् ।

अतिस्वेदातिगन्धस्स्यादल्पत्राणोल्पसङ्गमः ॥४२१॥

आहारं ...... शी..पुन................. जनम् ।
विकारान्कुरुते घोरान्कश्चित्कालव्यतिक्रमात् ॥४२२॥
अतिस्थौल्यतृषामोहज्वरोदरभगन्दरान् ।
व्रणकृच्छ्रं मेहकुष्ठनासाश्वासान् करोति च ॥४२३॥
तत्र मेदोऽनिलश्लेष्मनाश ... सर्वमिष्यते ।
तथादौ पञ्चकर्माणि कृत्वा रक्तं च मोक्षयेत् ॥४२४॥
श्यामा यवकुलुत्थानां मुद्गैस्समुपाचरेत् ।
सङ्गमैश्च सुरापानैर्लघुरूक्षोष्णभोजनैः ॥४२५॥
कटुतिक्तकषायातिचिन्ताव्यायामजागरैः ।
लङ्घनैरुपचारैर्वा स्थौल्यरोगमुपाचरेत् ॥४२६॥

**(पोषणद्रव्याणि)**

कृशानां बृंहणं देयं सर्वपानान्नभोजनम् ।
निद्रा चैव दिवारात्रौ छागमांसाशनं सदा ॥४२७॥
पीताश्वगन्धा पयसार्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पोषाय भवेन्नरस्य
बालस्य सस्यस्य यथा सुवृष्टिः ॥४२८॥
मत्स्यानि मांसानि पयांसि
सर्पिर्जलावगाहे गुडहिद्यखण्डा ।
मनोऽनुकूलास्सुहृदः स्त्रियश्च

द्रव्यानि दे(हं) खलु पोषयन्ति ।।४२९।।

**(कासरोगनिदानम्)**[१]

धूमोपघाताद्रजसा व्यायामाद्रूक्षसेवनात् ।

विमार्गाद्वापि भुक्तस्य क्षुद्रोधाद्वेगधारणात् ।

प्राणस्यागमनात् (..)कफः पुंसां प्रजायते ।।४३०।।

**(वातकासलक्षणम्)**[२]

वातार्हशङ्खशूलं च मूर्ध्नि पाश्र्वोदरेऽपि च ।

क्षामाननं बलक्षीणं भिन्नकांस्यस्वरं तथा ।

निद्राहीनं वमिस्सान्द्रं वातकासस्य लक्षणम् ।।४३१।।

---

(१)सुश्रुतेन उत्तरस्थाने कासप्रतिषेधे कासनिधनानि उक्तानि द्र० सु.सं. ५२

(२)यस्सदा वातलो जन्तुद(र)सात्म्यं वै निषेवते ।
रूक्षमश्नाति पिबति रूक्षं हि बहु खादति ।।
तस्य वातः प्रकुपितो गृहीत्वा हृदयं ततः ।
ऊर्ध्वं सम्प्राप्य धमनि(नी)रर(थ) कासाय कल्पते ।।
उरश्शूलं पार्श्वशूलं पृष्ठस्तम्भस्य(श्च) जायते ।
अटोप्यतेऽस्योदरं च शिव(र)श्चास्यातिमन्य(न्थ्य)ते ।।
उरोभिघातात्पार्श्वे च गृह्येतत इव देहिनः ।
गपप्र(नकफः)काश(स)मानस्य (स)संरम्भः प्रवर्तते ।।
सततं कासमानस्य मूत्रं (मुहुः) कासो रुणद्धि हि ।
इत्येभिर्लक्षणैर्विद्याद्वातकासं शरीरिणम् ।।- इति भेलसंहितायाम्

**(पित्तकासलक्षणम्)**

उरोदाहो वक्त्रशोभा तिक्तास्यं च त्वरस्तथा ।

कटं पित्तवमीत्युष्णं पाण्डुत्वं पित्तकासजे ॥४३२॥

**(श्लेष्मकासलक्षणम्)**

शिरोर्तिः कफपूर्णास्यः अरुचिर्गौरवं रुजा ।

कासे सान्द्ररुजा कण्डूः श्लेष्मकासस्य लक्षणम् ॥४३३॥

**(क्षतकासम्)**

पर्वभेदो ज्वरः श्वासस्तृष्णा वैस्वर्यपीडितः ।

सपूयं कासते शुष्कमनिष्कं वातशोणितम् ॥

पारावत इवाकूजन्कासमेतत् क्षतो भवेत् ॥४३४॥

**(क्षयकासलक्षणम्)**

गात्रशूलं ज्वरो दाहो मोहः श्वासश्च यस्य वै ।

शुष्कं निष्ठीवते रुग्णो सपूयं शोणितं तु यः ॥४३५॥

इत्येष क्षयजः कासः सद्यो बलवतो भवेत् ।

क्षीणानां देहनाशाय तदेवासाध्यसम्मतम् ॥४३६॥

**(श्वासनिदानम्)**

यदा स्रोतांसि संरुद्ध्वा मारुतः कफपूर्वतः ।

सर्वत्र व्रजति क्रुद्धस्तथाश्वासं करोति सः ॥४३७॥

प्रणष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ।

ऊर्ध्वं श्वासति यो दीर्घं न च प्रत्याहरत्यधः ॥४३८॥

श्लेष्मावृतमुखस्वेदो ऊर्ध्वदृष्टिर्विपश्यति ।
आनाहश्वेतमूर्छार्तो भृशं भवति दुःखितः ।।४३९।।

(श्वासोपद्रवाणि)

श्वासमूर्छाज्वरच्छर्दितृष्णातीसारविग्रहः ।
हिक्काखासाङ्गभेदश्च श्वासस्योपद्रवा दश ।।४४०।।

(क्षयरोगनिदानम्)

वेगरोधात्क्षयोत्पत्तिः साहसाद्विषमाशनात् ।
कफप्रधानैर्दोषैस्तु क्षीणे रेतस्यनन्तरम् ।।४४१।।
क्षीयन्ते धातवस्सर्वे ततश्शुष्यति मानवः ।
भुक्तद्वेषो ज्वरः श्वासकासशोणितदर्शनम् ।।४४२।।
ष्ठीवनं स्वरभेदश्च षड्पा राजयक्ष्मणः ।
गात्रपीडा च षड्पा राजयक्ष्मणि जायते ।।४४३।।
अंसपाश्र्वाभितापश्च सन्तापः करपादयोः ।
सत्त्वहानिश्च दौर्बल्यं राजरोगस्य लक्षणम् ।।४४४।।

(वातक्षयलक्षणम्)

सङ्कोचस्कन्धपाश्र्वाभ्यां स्वरभेदो ज्वरो भ्रमः ।
वातजे यक्ष्मणि ज्ञेया लक्षणं चाति शैत्यता ।।४४५।।

## (पैत्य(पित्त)क्षयलक्षणम्)

ज्वरदाहातिसारश्च रक्तवान्तिभ्रमो महान् ।
वीर्यस्तम्भरतिस्वल्पा लक्षणं पित्तजे क्षये ॥४४६॥

### (श्लेष्मक्षयलक्षणम्)

गुरुत्वं शिरसि च्छर्दि कासः कण्ठास्यताऽरुचिः ।
ऊर्ध्वश्वासश्च विज्ञेयं लक्षणं कफजे क्षये ॥४४७॥

### (वातपैत्य(पित्त)क्षयलक्षणम्)

स्वरभेदज्वरो दाहो शूलच्छर्दि ह्यरोचकः ।
वातपैत्या(पित्ता)धिकं ज्ञेयं राजरोगं महाबलम् ॥४५५॥

### (पित्तश्लेष्मक्षयलक्षणम्)

आलस्यं बहुनिद्रा च स्वल्पदाहज्वरो भ्रमः ।
वान्ति शोणितपूर्वाऽथ पित्तश्लेष्माद्भवेत्क्षये ॥४४९॥

### (वातश्लेष्मक्षयलक्षणम्)

स्वरभेदः कफः कण्ठे शूलं कासश्च छर्दि च ।
वातश्लेष्मोद्भवं चिह्नं ज्ञातव्यं च चिकित्सकैः ॥४५०॥

### (ब्रह्मयक्ष्मनिदानम्)

आपाण्डुत्वं शिरश्शूलतिमिरं कषणं क्षयः ।
वातप्रकोपश्वासश्च लक्षणं ब्रह्मयक्ष्मणः ॥४५१॥

अङ्गोपाङ्गपरिक्लेशोविवृद्धिः श्वासकासयोः ।
विष्टम्भो मूत्रकृच्छ्रं च लक्षणं राजयक्ष्मणः ।।४५२।।[१]

**(वैश्ययक्ष्मनिदानम्)**

अरुचिर्धातुविक्षेपमालस्यं कृष्णवर्णता ।
विड्बन्धमलमूत्रत्वं लक्षणं वैश्ययक्ष्मणः ।।४५३।।

**(शूद्रयक्ष्मनिदानम्)**

निद्राहारविहीनं च रक्तनाशं महाज्वरः ।
तैलच्छायावमित्वं च लक्षणं शूद्रयक्ष्मणः ।।४५४।।

**(असाध्यक्षयलक्षणम्)**

ष्ठीवते श्लेष्महीनाङ्गो ह्यतिसारेण पीडितः ।
शून्यशुष्कोदरं चैव यक्ष्माणं परिवर्जयेत् ।।४५५।।

---

(१)अनेकरोगानुगतो बहुरोग पुरोगमः ।
राजयक्ष्माक्षयः शोषोरोगराडिति च स्मृतः ।।
नक्षत्राणां द्विजानां च राज्ञौ भूद्यदयं पुरा ।
यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ।।
राज्ञश्चन्द्रमसो यस्मादभूदेष किलाऽऽमयः ।
तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिणः ।।
देहौषधक्षयकृतेः क्षयस्तसम्भवाच्च सः ।
रसादिशोषणाच्छोषो रोगराट्तेषु राजनात् ।।- इति योगरत्नाकरे

**(ग्रन्थान्तरे)**

ऊर्ध्वश्वासातिशुक्लाक्षो कांस्यपात्रहतस्वरः ।

अतिमेहकृशो मन्दो हीनबुद्धिबलेन्द्रियः ।।४५६।।

व्रणाङ्गो शुष्कहीनश्च क्षयो याति यमालयम् ।

तथापि तस्य कर्तव्यं(व्या) चिकित्सा जीवितावधि ।।४५७।।

**(क्षयरोगपरिपूर्णलक्षणम्)**

वह्निमान्द्यबलहीनता ज्वरो

श्वासकासकृशदेहता हिमम् ।

सत्त्व हानिरपि वान्तिरेचनं

राजरोगपरिपूर्णलक्षणम् ।।४५८।।

**(हिध्मानिदानम्)**

हिध्मापि पञ्चधा ज्ञेया भुक्त्वा चाशाम्यति स्वयम् ।

सात्म्यान्नपानतः क्षुद्रा भवत्यायास .... निलान् ।।४५९।।

अभुक्त्वा वर्धते क्षुद्रा भुक्त्वा च स्वास्थ्यमृच्छति ।

आहारादिषु या हिध्मा यमळाकरतश्चरेत् ।।४६०।।

यमळा सा त्वरायुक्ता तृष्णा ध्मानविधायिनी ।

महती चेतना हन्ति वाक्स्तम्भं विदधाति च ।।४६१।।

एता सुमहती हिध्मा गम्भीरा च न सिद्ध्यति ।

वेगिना सर्वलिङ्गौ च सर्वानपि विवर्जयेत् ।।४६२।।

सर्वेषामपि रोगाणां हिध्मा श्वासावुभावपि ।

आसाध्यलिङ्गं विष्टं च तस्मादेतासु दुस्तरा ।।४६३।।

**(गुल्मनिदानम्)**[१]

दुष्टवातोत्थिता ग्रन्थिः पार्श्वहृन्नाभिवस्तिषु ।
तद्गुल्मं पञ्चधा ख्यातमचलं चञ्चलं क्वचित् ।।४६४।।
उद्गारो बहुविष्टम्भो तृप्तेराध्मानकूजनम् ।
आनाहमूर्ध्ववातं च गुल्मलक्षणमग्रज ।।४६५।।

**(वातगुल्मलक्षणम्)**

गलवक्त्राङ्गशोषं च कुक्षिपार्श्वशिरोरुजा ।
भुक्तास्यान्ते व्यथा जीर्णे वातगुल्मस्य लक्षणम् ।।४६६।।

**(पैत्य(पित्त)गुल्मलक्षणम्)**

ज्वरदाहोऽङ्गदाहश्च अन्ने जीर्णेऽतिशूलता ।
स्पर्शाविसो व्रणस्वेदो पित्तगुल्मस्य लक्षणम् ।।४६७।।

---

(१)दुष्टावातादयोऽत्यर्थं मिथ्याहारविहारतः ।
कुर्वन्ति पञ्चधा गुल्मं कोष्टान्तर्ग्रन्थिरूपिणम् ।। -
इति योगरत्नाकरे

**(श्लेष्मगुल्मनिदानम्)**[१]

शीतज्वरश्च हृल्लासं कासं हृद्भेदगौरवम् ।
उन्नतं क.....दं कफगुल्मस्य लक्षणम् ।।४६८।।

**(त्रिदोषगुल्मनिदानम्)**

त्रिभिश्च लक्षणैर्युक्तस्सन्निपातोदरं भवेत् ।
सम्पादोदरतुल्या च अग्निलक्षणमुत्तमम् ।।४६९।।

(रक्तगुल्मलक्षणम्)

आमगर्भरसो वाऽथ या नारी मुञ्चति क्वचित् ।
तस्या वायुर्गुदेरेकं रक्तगुल्मं तथा भवेत् ।।४७०।।
पुंसां त्वारक्तपूतेन रक्तपित्ताधिके क्वचित् ।
चिकित्सा दशमे मासे ज्ञेया पुंसां च लक्षणात् ।।४७१।।
गतप्रसवकाराय तिर्यग्गुल्मे स्वयं भवेत् ।
चिरेण कूर्मवद्गुल्मं जायते च कृशाङ्गता ।।४७२।।
ज्वरच्छर्दितृषाशूलमङ्गदाहोरु .... श्वसन् ।
हृन्नाभिहस्ते पादेषु श्वयथुर्हन्तिगुल्मिनम् ।।४७३।।

---

(१)शीतं गुरु स्निग्धमचेष्टनं च सम्पूरणं प्रस्वपनं दिवाच ।
गुल्मस्य हेतुः कफसम्भवस्य सर्वश्च दुष्टो निचयात्मकस्य ।।
सैमित्यशीतज्वरगात्रसादहृल्लादकासारुचिगौरवाणि ।
शैत्यं रुगल्पाकठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ।।
-इति योगरत्नाकरे

(शूलनिदानम्)

हानसाद्धावनाच्छोकादतिभाषणसङ्गमात् ।

रूक्षान्नशुष्कशाकं च कषायं तिक्तसेवनात् ।।४७४।।

तेन वायुर्भवेत्क्रुद्धः कुरुते शूलमष्टधा ।

पृथग्दोषैस्सन्नि(पात)दामगुल्मात्सशर्करात् ।।

शूलं सप्तविधं प्राहुस्तेष्वसाध्यं त्रिदोषजम् ।४७५।।

(वातशूललक्षणम्)

अत्यम्बुपानादनिशातिसङ्गात्

श्रमाभिघातादतिमैथुनाच्च ।

करोति शूलं प्रबलं समीरं

कप्यूरुपृष्ठे च भवेच्च वस्तौ ।।४७६।।

(पैत्य(पित्त)शूललक्षणम्)

कट्वम्लतीक्ष्णात्यशनैः प्रवृद्धं

पित्तं सदाहं प्रकरोति शूलम् ।

मूर्छाज्वरस्वेदयुतं विदग्धे

शान्तिप्रदं पित्तभवं (त)माहुः ।।४७७।।

(तृष्णा)मूर्छारुग्वदो दाहः शर.(तृ)ष्णाऽतिवेदना ।

मध्याह्ने चार्धरात्रे च शूलं पैत्याधिके भवेत् ।।४७८।।

(श्लेष्मशूललक्षमम्)

ग्रावोदकानूपकमांसकन्द

कीलालपिष्टान्ननिषेवणाच्च ।

श्लेष्मातिवृद्धो जनयेच्च शूलं

तैमिर्यमूर्छारतिसम्प्रयुक्तः ।।४७९।।

मांसेक्षुपिष्टगुर्वन्नमाषपायसपिच्छलम् ।

अपक्वमाहिषं क्षीरं कफजोद्धातिशूलकृत् ।।४८०।।

शिरोर्तिकासहृल्लास शूलहृद्व्ययथयेद्व(?)नम् ।

वसन्ते शिशिरे चैव कुप्यते कफजं विदुः ।।४८१।।

(दोषशूललक्षणम्)

त्रिदोषजे ......... पात्प्रबले ।

त्रिलिङ्गमेतत्प्रवदन्त्यसाध्यम् ।।४८२।।

मिश्रिते द्वन्द्वजं ज्ञेयं कष्टसाध्यं क्वचिद्भवेत् ।

त्रिभिर्लक्षणसंयुक्तमसाध्यं सन्निपातजम् ।।४८३।।

(आमशूललक्षणम्)

अत्यम्बुपानाद्विषमाशनाच्च

सन्धारणान्मूत्रपुरीषयोश्च ।

प्रवृद्धमामं जनयेच्च शूलं

हृत्पार्श्वकुक्ष्यादिषु तीव्रवेगान् ।।४८४।।

कफशूले यथा चिह्नं यथा दोषश्च छर्दिनः ।

आनाहश्च प्रसेकश्च आमशूलस्य लक्षणम् ।।४८५।।

**(शर्कराशूललक्षणम्)**

कट्यां पृष्ठे पार्श्वयोर्नाभिमूले
वस्तौ पायौ शर्करा सुप्रवृद्धम्।
कुर्यात्तोदं मूत्रकृच्छ्रं च घोरं
सायं सद्भिः शर्करा शूलयुक्तम् ॥४८६॥

**(गुल्मशूललक्षणम्)**

शूलस्ता ..... यते वातगुल्मे
सम्यग्वृद्धे तेन विण्मूत्रसङ्गः।
छर्द्युद्गारः स्वेदमूर्छा सतृष्णा
स्यं सन्तप्तं गुल्मशूलं वदन्ति ॥४८७॥

**(परिणामशूललक्षणम्)**

भुक्ते जीर्णे च यच्छूलं तच्छूलं परिणामकम्।
वातपित्तकफाधिक्यं विज्ञेयं पूर्वलक्षणम् ॥४८८॥

**(जलकूर्मलक्षणम्)**

एवमेव विधिः कार्यः प्लीहाष्ठीलयकृ ......।
यथा शेषाः प्रकुपितो (वा)युता समुदीरिता ॥४८९॥
वामे वा दक्षिणे वापि पार्श्वे समभिधीयते।
आयतं कठिनं चापि वेदनाऽपि न जायते ॥४९०॥
सदनं सन्धिदौर्बल्यं पाण्डुभावं करोति च।

जलकूर्मन्तु तं विद्यात् श्लेष्मवातसमुत्थितम् ।
तस्य कुर्यात्प्रयत्नेन प्लीहरोगचिकित्सकम् ॥४९१॥

**(प्लीहनिदानम्)**

अत्याशितस्य संक्षोभध्यानयानादिचेष्टितैः ।
अतिव्यवायकर्माध्वगमनव्याधिदर्शनैः ॥४९२॥
वामपार्श्वाश्रितः प्लीहः च्युतः स्थानाद्विवर्धते ।
शोणितं वा रसादिभ्यो विवृद्धं तु विवर्धते ॥४९३॥
सोष्ठीलो नातिकठिनः प्रोन्नतः कूर्मपृष्ठवत् ।
मुष्टिमात्रं प्लीहसाध्यस्त्वरितं तमुपाचरेत् ।
अतिप्रमाणवृद्धिस्तु न सिद्ध्यति कथञ्चन ॥४९४॥

**(विद्रथिनिदानम्)**

वल्मीकवत्समुच्छ्रायो अन्तर्भवति इन्द्रडिः ।
उक्ताद्वा गुल्मवच्छान्ता हृव्यथा शूलकुक्षिगाः ॥४९५॥
गुदे मुखे वसेद्वृक्के जायते लक्षणं शृणु ।
नाभ्यां पित्तं तथाऽटोपं कुक्षौ मारुतकोपनम् ॥४९६॥
हृदि श्वासश्च कासश्च वंक्षिणपृष्ठकटिव्यथा ।
वृक्कायाः पार्श्वसङ्कोचप्लीहामांसावरोधनम् ॥४९७॥
गुदे वातनिरोधाय वस्तौ कृच्छ्राल्पमूत्रता ।
कुरुते विद्रथिः पुंसां तस्यादौ रक्तमोक्षणम् ॥४९८॥

पक्कं वा पणवत्कुर्यात्क्रिया शो(फ)वदाचरेत् ।
आस्वादनं च निष्पन्दः छर्दिहिक्कातृषास्य युक् ।।
आमज्वरोऽतिसारं च विद्रधिर्मारयेन्नरम् ।।४९९।।

**(हृद्रोगनिदानम्)**

अत्युष्णाम्लकषायाच्च अतिस्त्रीव्यसनेन च ।
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तत्प्रचक्षते ।।५००।।
मारुतात् हृदयं यस्य स्फुटते पाट्यतेऽथवा ।
पित्तमूर्छाक्लमस्वेदोमुखशोषश्च जायते ।।५०१।।
श्रमबाधिर्यमन्दाग्निकफस्रावं कफात्मिके ।
मिश्रिते द्वन्द्वजे ज्ञेयं सर्वलिङ्गे त्रिदोषजे ।।५०२।।

**(मदात्ययलक्षणम्)**

वातात्पित्तात्कफात्सर्वे चत्वारस्स्युर्मदात्ययाः ।
सर्वेऽपि सर्वे जायन्ते व्यपदेशस्तु भूयसा ।।५०३।।
सामान्यलक्षणे तेषां प्रमादो हृदयव्यथा ।
विड्भेदः प्रततं तृष्णा सौम्याद्ज्ञेयोज्वरोऽरुचिः ।।५०४।।

**(उदरनिदानम्)**

अजीर्णस्थलिने चाऽन्ये मन्दाग्नौ मलसञ्चयात् ।
रुध्वान्येऽधोम्बुवाहानि जलयत्युदरं नृणाम् ।।५०५।।
शोफस्वेदनमङ्गानां दाहतृष्णा विवर्णता ।।५०६।।

विस्फातसङ्ग्रहा पार्श्वे श्वयथुं चाग्रलक्षणम् ।
तत्र सर्वोदराणां च देयं युक्तं विरेचनम् ॥५०७॥

**(जलोदरनिदानम्)**

उदरं सजलं यस्य वर्धति श्वयथुस्तथा ।
हस्तपादकृशास्थातौ स जलोदरलक्षणम् ॥५०८॥

**(पैत्यो(पित्त)दरलक्षणम्)**

ज्वरमूर्छातृषादाहं कटुकास्यं च पित्तता ।
भ्रमोऽतिसारस्वेदश्च स्यात्पित्तोदरलक्षणम् ॥५०९॥

**(वातोदरलक्षणम्)**

तत्र वातोदरे शोभा पाणिपान्नाभिकुक्षिषु ।
उदरं वातसम्पूर्णं सव्यथं च कृशाङ्गता ॥
मुहुर्मुहुः स्रवत्येव शुष्ककासं च लक्षयेत् ॥५१०॥

**(श्लेष्मोदरलक्षणम्)**

श्वयथुं कारयन्निद्राकासश्वासश्च पाण्डुता ।
उदरं स्तिमितं स्निग्धं शीतस्पर्शं कफोत्थिते ॥५११॥

**(सन्निपातोदरलक्षणम्)**

वातपैत्यकफान्मिश्रं सन्निपातोदरं भवेत् ।
सन्निपातोदरे कुर्यादग्निरक्षणमुत्तमम् ॥५१२॥

स्नेहोष्णं स्वेदं वाते पित्ते देयं विरेचनम् ।
वान्ति श्लेष्मोदरे देयं सन्निपातत्रयं हितम् ।।५१३।।

(प्लीहोदरलक्षणम्)

आनाहृदौ यकृत्प्लीहक्रियां गुल्मोपपादिताम् ।
विरक्तस्य विरूढस्यादन्तरं दधि भोजनात् ।।५१४।।
वातस्य कूर्मरस्यान्ते प्लीहवद्धास्थितां स्थिराम् ।
मा(पा)णिना मर्दयेदेनं कूर्मरं स्पन्दनाय च ।
लब्धे जले च भूयोऽपि स्नेहपीतं विरेचनम् ।।५१५।।

(क्रिमिनिदानम्)

मधुराम्लदिवानिद्राविरुद्धाजीर्णशीलनात् ।
द ...प्रियत्वादस्नानादव्यायामाद्भवेत्क्रिमिः ।।५१६।।
विड्भेदज्वरमग्निमान्द्यमरुचिं शूलं कृशत्वं गुदे ।
कण्डून्पीतसितारुणन्विदधते पक्वाशये विड्भवः ।।५१७।।
सम्पातः क्रिमयः कफेन विविधाकारस्तथामाशये ।
हृल्लासारुचिकाश्र्यपीनसमुखस्रावा विपाकज्वराः ।।५१८।।
रक्तोद्भवा रुधिरवाहिसिरासुवृत्ताः
कुष्ठैककर्मतनलोहितपादहीनाः ।
केशान्तरेषु मलिनेषु ..... लानुकारा
कुर्वन्त्यनेकचरणा पिटकास्सकण्डूः ।।५१९।।

## (विषकृत्रिमनिदानम्)

मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ।

जातः प्रागमृतोत्पत्तेः पुरुषो वे .. दर्शनः ॥५२०॥

दीप्ततेजो चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः ।

जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥५२१॥

हुंकृतो ब्रह्मणा मूर्तिस्ततः स्थावरजङ्गमाः ।

नोऽध्यतिष्ठन्निजं रूपमुखत्वावञ्जनात्मकः ॥५२२॥

स्थिरमत्युल्बणं वीर्ये यत्काण्डेषु प्रतिष्ठितम् ।

कालकूटेन्द्रवत्साख्यशृङ्गिहालाहलादिकम् ॥५२३॥

सर्वलूतादिदंष्ट्रासु दारुणं जङ्गमं विषम् ।

स्थावरं जङ्गमं चेति विषं प्रोक्तमकृत्रिमम् ॥५२४॥

कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ।

हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ॥५२५॥

शोफपाण्डूदरानाहैर्दुर्नामादीन्करोति वा ।

अनेकविषजीवानां चूर्णं चोपविषैर्युतम् ॥५२६॥

मिश्रितं नखकेशैश्च लोमाद्यं चूर्णसंयुतम् ।

कृत्रिमं तु विषं ज्ञेयं पक्षान्मासाद्विबाधते ॥५२७॥

आलस्यं कुरुते जाड्यं कासाश्वासबलक्षयम् ।

रक्तस्रावज्वरं शोभा पीतचक्षुर्मलक्षयः ॥५२८॥

मिश्रनाडीमिश्रवर्णं मिश्रधातुप्रवर्धनम् ।

पार्श्वशूलाति .... च जिह्वा लालाजलान्विता ॥५२९॥

क ... तिमिरं ज्ञाने अन्नद्वेषं शिरो व्यथा ।

अल्पमूत्रमतीसारं विड्भेदं श्रममुत्कटम् ॥५३०॥

अतिस्वेदभ्रममदोगरदोषस्य लक्षणम् ।

केशद्युतिश्शुष्ककायः प्रलापमरुचिर्ज्वरः ॥५३१॥

भुक्तद्वेषविजृम्भणातिसरणोदारस्य संशोषणैः ।

हिक्काविस्तृतिदाहमोहकंषणै श्वासै ..रोगकरैः

जानीयादुपलक्ष्य साधुकुशलोऽयं कृत्रिमाख्य

...............यम् ॥५३२॥

मिश्रं पथ्यमव ... वा सङ्कीर्णाशनमुच्यते ।

अकाले बहुवाल्पं वा भुक्तं तु विषमाशनम् ॥५३३॥

विद्यात्पथ्याशनं भूयो भुक्तस्योपरि भोजनम् ।

विरुद्धमपि चाहारं विद्याद्गरविषोपमम् ॥५३४॥

**(सर्पजातयः)**

जातिः म च रूपं च भुजङ्गानामिहोच्यते ।

ब्राह्मणा श्वेतसर्पास्तु क्षत्रिया रक्तवर्णकाः ॥५३५॥

वैश्यास्तु पिप्पलाश्चैव वासुकिः शङ्खपालकः ।

तक्षकश्च महापद्मः कर्कोटः पद्म एव च ॥५३६॥

कुलानि नागाह्यष्टौते तेषां चिह्नं शिवोदितम् ।

तस्य मन्त्रौषधास्सर्वे सिद्ध्यन्ते नान्यथा पुनः ॥५३७॥

....स्तस्य सर्पादीन् गच्छन्ते गरुडो यथा ।

कालज्ञानमतो वच्मि शिवेनोक्तं यथा पुरा ॥५३८॥

ज्ञेयो दशविधोदंशो भुजङ्गानां (परीक्षकैः) ।

भीतोन्मत्तः क्षुधार्तश्च अक्रोधो विषदर्पितः ॥५३९॥

उद्याने जीर्णकोपी च पथि शृङ्गाटकेपि च ।

शुक्लवृक्षे श्मशाने च अक्षश्लेष्मातसीगुः ॥५४०॥

देवतायतनागारे खर्जूरे शाकवृक्षके ।

स्तनयोः स्कन्धयोः कुक्षौ लिङ्गे वृषणनाभिषु ॥५४१॥

मर्मसन्धिषु सर्वत्र सर्पदष्टो न जीवति ।

अष्टमी पञ्चमी पूर्णम्यमावास्या चतुर्दशी ॥५४२॥

अशुभास्तिथयः प्रोक्ताः सर्पदष्टो न जीवति ।

कृत्तिका श्रवणे मूला विशाखा भरणी मखा ॥५४३॥

पूर्वास्तिस्रस्तथा चित्रा ह्याश्लेषां च न जीवति ।

मध्याह्ने सन्ध्ययोश्चैव अर्धरात्रे निशान्तयोः ॥५४४॥

कालवेळा समाख्याता सर्पदष्टो न जीवति ।

सर्पस्य तालुमध्ये तु दम्भो ह्यङ्कुरसन्निभम् ॥५४५॥

विमुञ्चति विषं घोरं ज्ञेयं कालस्य संज्ञिकम् ।

एकदम्भो भवेद्यस्य दंशश्च रुधिरोल्बणः ॥५४६॥

चक्राकृतिश्च वा दंशः प्लक्षजम्बूफलाकृतिः ।

सुनिम्बस्वेदयुक्तं वा त्रिदशाहे न जीवति ॥५४७॥

स्रवेन्मूत्रपुरीषं वा हृच्छूलच्छर्दिदाहकृत्।
अनुनास्यं च वा वाक्यं सन्धिभेदमथापि वा ।।५४८।।
ताम्राभनेत्रयुगळमथवा काचनीलकम् ।
वियोगोदरदंष्ट्राभ्यां तं विद्यात्कालभक्षितम् ।।५४९।।
वेदना दंशमूले वा नष्टदंशोऽथवा भवेत् ।
उत्पातं तीव्रदाहं च सोऽपि कालेन भक्षितः ।।५५०।।
सोमसूर्यं तथा दीपं यथा दीपं न पश्यति ।
दर्पणे सलिले खड्गे घृते तैलेऽथवा मुखम् ।।५५१।।
न पश्येद्वीक्षमाणोऽपि कालदष्टो न जीवति ।
ज्ञात्वा कालमकालं च पश्चाद्भेषजमादिशेत् ।।५५२।।
सर्पाणां तु विषं नास्ति कालदष्टो न जीवति ।
(तथापि तत्र)कर्तव्यं चिकित्सा जीविताविधि ।।
रसदिव्यौषधानां च प्रभावे चिन्तितं भवेत् ।।५५३।।

**(पाण्डुरोगानिदानम्)**

नयनधवलवर्णं स्वेदजं जाड्यचयुक्तं
पवनमधुकराङ्गम् अङ्गशोफातिपित्तम् ।
अरुचिमनलजाड्यं श्लेष्मनिद्रातियुक्तं
श्रममनलविदाहं षोडशं पाण्डुरूपम् ।।५५४।।
व्यायामलवणाम्लातितृष्णामृण्मयसेवनात् ।
दिवास्वापादजीर्णाच्च जायते पाण्डुरत्वचः ।।५५५।।

